४.११.१० कवरी—( पं ) वेणी ।

४.११.१२ मयजल—( ग ) प्रेमसलिलम्, ( पं ) शुक्रः ।

४.११.१४ नहे—( ख ग ) नभसि ।

४.११.१५ नसावडइ—( ख ) न संपद्यते ।

४.१२.३ मलतकणय—( ख ग पं ) कनकमाला[1] ।

४.१२.५ वयसवणजुत्ति—( ख ) कुबेरसदृशम्, ( ग ) ऐश्वर्यादिना वैश्रवणयुक्तिरुपपत्तिर्यस्य ।

४.१२.६ रूवलच्छी—( ग पं ) रूपश्री ।

४.१२.७ फेरियाड—( ग प ) [2]हस्तेनोत्क्षिप्य भ्रामिता[3] ।

४.१२.११ भासा... लक्खु—( ख ग पं )—संस्कृत-प्राकृत-अपभ्रंशस्वरूप भाषात्रय तल्लक्षण च; लक्खु—( ख पं ) तद्वाच्यम्, दसण[4]—( ग प ) दर्शनानि षड्, नआ—( ग पं ) नया. नैगमादय. सप्त ।

४.१२.१३ सचित्तु—चित्रेण सह ।

४.१३.१ नवल्लु—( ग ) अभिनव, ( प ) अभिनव अन्यजनासम्भवम् इति, उम्मीलइ—(ख ग पं) प्रकटीभवति ।

४.१३.३ आउंचिय—( ग पं ) कुरुण्टायमान, अंगुलितणावलि—( ग पं ) अङ्गुलयः ( पं ग्राण अङ्गुलिः ) षोडषाका. तासा आवलि[1] पङ्क्तिः ।

४.१३.७ नासावंसु—( ग पं ) नासिका, अहरमुद्द—( ख ग पं ) अधरस्वरूपम्, करमुद्दव—( ख ग प ) हस्तमुद्रिकेव ।

४.१३.८ धणुगुणु... टंकारइ—( ग पं ) तासा कोमलध्वनिद्वारेण मकरचिन्ह[2] काम· धनुषो गुणं दोर टङ्कारयति, वादयतीव ।

४.१३.९ अच्छं—( ग पं ) अच्छं पत्तलं निर्मल वा ।

४.१३.१० रेहाइल्लु—( ग पं ) रेखायुक्त, कलु—( ग पं ) मनोज्ञ, विजयसंखु—( ग पं) त्रिभुवनविजय-सूचकशङ्ख, नज्जइ—( ग पं) ज्ञायते ।

४.१३.११ विडंवइ—( ग पं ) कदर्थयति ।

४.१३.१२ उक्कुक्किकरियसिहिण—( ग प ) [3]प्रथमतो उद्गतवन्तौ, सिहिण—स्तनौ, रइपइरायहो—( ग पं ) कामस्य ।

४.१३.१३ गुलिया—( ख ग ) 'गुल्ही' इति लोके ।

४.१३.१४ रोमंचिए[4]—( ग प ) रोमावल्या ।

४.१३.१६ रंभागब्भोरु व[5]—( ग प ) रंभा-कदली, तस्याः गर्भो ( ? ) इव, रइरामहो—( पं ) रत्या रमणीयस्य, वम्महधामहो—( पं ) मन्मथवलगृहस्य-श्रोणिततलस्य ।

४.१३.१७ कुम्मायारु—( ग प ) कूर्मोन्नताकारम् ।

४.१३.१९ ताउ—( ग ) ताश्चतस्र, अहिट्ठिड—( ग पं ) अधिष्ठिता यत्र देवे स्थिता प्रत्यक्षीभूता न यत्र दृष्टा इत्यर्थ ।

---

[४.१२] १. ख ग °माला । २ पं हस्ते उत्क्षिप्य । ३. ग °ता । ४ प त्रसुदंसण । [४.१३] १. प °लि । २. ग °चिन्ह । ३. ग. प्रथम । ४. पं °चइ । ५. पं य ।

४.१४.१ मयणसयणं व—( ख ग पं ) मदनस्य शयनं शय्या इव ।

४.१४.२ धारंति ताउ—( ख ग पं ) ताः धरन्ति, विद्दुम.....अहरं—( ग पं ) ओष्ठम्, कथभूतम् ? विद्दुम... दंतुर—( ख ग पं ) विद्रुमं प्रवालक हीरकश्च प्रसिद्धः तयो. रुचि. दीप्ति. तया दन्तुर कर्बुरं विद्रुमोपमाधरबिम्बं शय्यास्थानीयम्, हीरकतुल्या दन्तरुचिः पुष्पप्रकरस्थानीयेति ।

४.१४.५ चलणच्छविसाम—( ख ग पं ) चरणाना पादाना छवि. कान्ति. तया, साम—तुल्यता[1]; अहिलासि—( ग ) अभिलाषेन, वाञ्छया, कमलेहिं—( ग ) पद्मैः ।

४.१४.६ नियय....पमाणम्मि—( ग ) निजमात्मान क्षिप्त्वा कण्ठप्रमाणे ।

४.१४.७ सलग्गहिखाइयाले—( ख ग पं ) नाभेरधोरेखा सैव खातिका तथा युक्ते, तिवलि—( ग पं ) नाभेरुपरि रेखात्रयम् ।

४.१४ १० आयउ—( ग ) एता, निम्मविउ—( ग ) निर्मिता; पयावइ—( ग ) ब्रह्मा ।

४ १४.११ नियवि—( ग ) दृष्ट्वा; हसिय—( ख ) उपहसितम्, ( ग ) उपहसति ।

४.१४.१९ नासंकमि—( ग प ) अस्माकमसंख्यमप्यमुमर्थं सवज्ञैः सहोपोद्वृतं[2] वक्तुं (न) शक्नोमि ।

४.१४.११ लग्गु—( ग पं ) लग्नः, जोईसें—( ग ) ज्योतिष्केन ।

४.१५.१ पंचप्पयारु—( ख ग पं ) पञ्चपरमेष्ठीभेदभिन्नं पञ्चप्रकारम् ।

४.१५.८ केरलि—( ख ग पं ) केरलदेशोद्भवानायिकाः ।

४.१५.६ ( ख ) सज्झइरि—( ख ) सह्याचलस्य; कणिर—( ग ) कण कण इति शब्दित.; कण्णावतंसु—( पं ) ताडपत्रम् ।

४.१५ १० कोंतलि—( ग प ) कोन्तलदेशोद्भवा नायिका[1]; कोंतलभर—( ग पं ) केशसंघात ।

४.१५.११ उद्दीविय—( ख ) उत्कृष्टं कृतम्, उद्दीविय[2]... विडंबु—( ग पं ) उद्दीपितम् उत्कटं कृतं कामक्रीडनं यासा ताश्च ता[3] रम्घ्रश्च[3] नर्मदाः तत्तद्देशोद्भवानायिकास्तासा विडम्बक.[4] कदर्थक.; पं नर्मदातटदेशो० ... ।

४.१५.१२ पयडिय दरोरुभाउ—( ख ग पं ) ईषत् प्रकटित ऊरुदेशरूपो[5] येन ।

४.१५.१५ कीवइ—( ख ग पं ) क्रीडानि ।

४.१६.३ तरलदल—( ग पं ) तिर्यक्प्रसूनपत्रावली, लवली—( ग पं ) लवङ्ग; कयलीमुहं—( ग पं ) कदलीप्रभृति ।

४.१६.५ नग्गोह—( ग पं ) वटवृक्षः ।

४.१६.८ रइवराणत्ता—( ग पं ) कामादिष्टा, अवयण्ण—( ग ) व्यावृत्ता, ( प ) व्यावृत्य; माहवसिरि—( ग पं ) वसन्तलक्ष्मी ।

४.१६.१२ थण ...विडविणि—( ख ग पं ) स्तनरमणप्राग्भारकदर्थिता, निहुअणकेलिहि—( ख ग पं ) कामक्रीडाया ।

४.१७.१ अणुणइ—( ख ग पं ) अनुकूलं करोति, परिहासा ...भणइ—( ख ग पं ) विशिष्टाना परिभाषणयोग्यानि पेशलानि मनोज्ञवचनानि भणति एव वक्ष्यमाणा कन्या येन ।

---

[४.१४] १ ख ग समा°, पं समतुल्यता । २ प °पोद्वृत्त्ये । [४.१५] १. पं °का । २ पं °विए । ३. पं तरीधश्च । ४. प विट° । ५. पं °रूप. । [४.१६] १. पं निहुवण° केलिहिं ।

४.१७.२ कुरओ[1]—( ख ग पं ) वृक्षविशेष, साणदु[2]जं न[2] आलिंगिओ सि—( ख ग पं ) यतः यस्मात्र [3]सानन्दो भवसि[3] आलिङ्गितः सन् ।

४ १७ ३ केम्परुक्ख—( ग पं ) बकुलवृक्ष. ।

४.१७.४ कलिओ "रुक्ख—( ग पं ) आकलितोऽसि ज्ञातोऽसि त्वं अशोकवृक्ष इति, लइ—( ग पं ) - पूर्यता, पाय ‴मुक्ख—( ग पं ) यत पादप्रहारेण त्वं मूर्ख हससि, विकसति ।

४.१७५ विवरीयवयण—( ग प ) विपरीतवदना, पराङ्मुखा, पणयकुद्ध—( ग ) प्रणयकोपा, ( पं ) सभया—भयात्रिरयवसप्रणयकोपा [ °कोपा ] ।

४.१७७ परियत्तवि—( ग ) व्याघुटय ।

४ १७८ विराइ—( ग प ) विराजते, धाइ—( ग पं ) धावति ।

४.१७.९ नववहुवहे—( ग ) नवीनकान्तायाः ।

४.१७.१२ आवाणए[4]—( ग पं ) आपानके हि मद्यप-मद्यपानमेलापकस्थाने ।

४.१७.१४ झिज्जन ‴मयणु वयणु वहइ—( पं ) मद्यपानरहितप्रदेशे प्रसर-मदनवशादचलमवृ(रि)पतकोप-प्रदेशे वा रक्त मुख धरतीति ।

४.१७.१५ फलिहमय अवाणयचषउ—( ग प ) स्फटिककोशकपीयमानमद्य ।

४.१७.१६ मयणाहि—( पं ) कस्तूरिका ।

४.१७ १६-१७ मयणाहि ‴चंदमरिसु सुहु किउ एउ कूडमंतु—( ग पं ) निष्कलङ्क मुख कस्तूरिकातिलकं कृत्वा सकलङ्क कृतमिति कूटमन्त्रोऽयम् ।

४.१७ २० लहासु—( ग पं ) लडहिमा[5] ।

४.१७ २१ सं सत्त ‴पवत्तु—( ग पं ) तव विघ्नत्व सकलमप्युद्यान प्राप्तम् ।

४.१७ २२ कलइ—( ग पं ) आकलयति ।

४ १७ २३ वकालावहिं " पडिक्खलइ—( ग पं ) परिस्खलइ वक्रोक्त्या अर्थान्तरे योजयति ।

४.१८ १ नच्चंता मोरा—( ग प ) जम्बूस्वामिनोऽभिप्राये मयूरा, नायिकया च तद्वचन छलितम्, त्वदीया नृत्यन्तमिति, 'मोरा' शब्दो हि मयूरे आत्मीये च वर्तत इति ।

४.१८ २ कारंडाण "रिउवरिणिहुं—( ग प ) का रण्डाना विधवाना पङ्क्ति चेत्पृच्छसि[1] । या तव रिपुगृहिणीनामिति छलोक्त्या उत्तर [2]दत्तम्

४.१८.३.सरु‴चावे वहइ—( ग पं ) सरु—शब्द. कोकिलायाः कोमल एव वहति प्रवर्तते इति स्वामिनो वच, तच्छलोक्त्या प्रश्नं करोति, कः शर. कोमल एव वधते इति चेत् ? उत्तरमाह—( ग प ) य शर मेदनधनुटापिते चापे गृह्णाति स पुष्पमयबाणत्वात् कोमलोऽपि वधते ।

४ १८ ४ एयं च ‴जणाण—( ग प ) इह चारवृक्षेवन[3] आनोहीति स्वामिनो वच, तत्र छलोक्तिः प्रिया-लान[4] प्रियतमस्य आलपनं संभाषण दुर्लभ दुर्भगजनानाम् ।

४.१८.५ सारंगं ‴पडइ गच्छ—( ग पं ) सारंग-हरिण गता, सारंगी-हरिणी, दक्षा धूर्ता इति ( पं ) स्वामिनो वचः, तत्र छलोक्तिः यदि सारङ्गो उत्तमाङ्गेना सारङ्ग गता भूमि प्रविष्टा तत सा नृत्यतु, पटह वादय त्वं ! गच्छ !

---

[४.१७] १ प कुरवो । २ पं जन्न । ३. पं सानदं भि । ४ पं °णइं । ५. ग °हिम । [४.१८] १. पं °से । २. दत्त. । ३ पं चारवन वृक्ष । ४. °लवण ।

४ १८.६ पिय····कामधेणु—इन्द्रगोपकान् रक्तकीटकविशेषान् विगतरेणून् निर्मलान् [५]पश्य पश्येति[६] स्वामिनो वचः, तत्र छलोक्ति. यदि इन्द्रगोः कामधेनुस्तस्याः पादान् पश्यसि, विरेणून्—परिस्फुटान् तदा लड्-पूर्यताम्, कामधेनुरियमिति, मग्गि दुद्धु—याचय दुग्धम् ।

४.१८ ७ जले ···जलम्मि मंदु—( ग प ) जले कङ्को बकः, हंगो चेय, हंसो यद्यपि स न भवति, तथापि मन्दमन्दगतिः, क्व ? जलम्मि—जले, इति स्वामिनो वच, तत्र छलोक्ति. तु हंसो चिवय त्वमेव स कङ्क कं परमात्मा मुखं ( पं स्वरूप ) कौति ( प कोपति ) प्रतिपादयतीति कङ्क, जलम्मि मंदु—जडे [७]जडस्वरूपे मन्द [८]निरन्तर [ °तर ]जडस्वरूपमित्यर्थ. ।

४.१८.८ सुइ....कज्जु नाह—(ग पं) शुक. कीरो विशेषेण जल्पतिस्तत्र [अत्र] का बाधा का पीडा इति स्वामिनो वचः, तत्र छलोक्ति —यदि सुतः पुत्रो विलपति, हे नाथ ! तदा संठवि—सस्थाप्य श्रद्धा कुरु, यतः इद परकीयकार्य न भवति ।

४.१८.९ म हे सरु···णिच्चणहाणु—( ग पं ) माघमासे सरः कमलसरोवर. शिशिरेण हिमेन दग्धं जानीहि त्वमिति स्वामिनो वचः, तत्र छलोक्तिः—माहेश्वरो महेश्वरभक्त.[९] गडुकादिकं ददाति[१०] यदि शीतेन म्रियते[११] तदा मरिहिइ—त्रिदण्डी अतिशयेन म्रियता[१२] यतो यस्य नित्यमेव त्रिसन्ध्यास्नानम् ।

४.१८.१० सुद्धिहे····कत कंतावसाणु—( ग पं ) तापसाना शुद्धे. कारण कं-पानीयमिति स्वामिनो वचः, तत्र छलोक्ति कंतावसाण[१३]—कान्तावशवर्त्तिना रागिणा तापसानां जलस्नानमात्रेण का शुद्धिर्न कदाचि-दपीत्यर्थ [ काचि० ? ] ।

४ १८.११ केरिस ···हरिणंकरेह—( ग पं ) हे तन्वङ्गि त्व अथ च कीदृशा वक्रा ? अतिवक्रासीत्यर्थ.[१४] इति स्वामिनो वच , तत्र छलोक्ति—हे नाथ यासौ तन्वङ्गी अतिवक्रा च सा हरिणाङ्कस्य चन्द्रस्य रेखा द्वितीयाचन्द्रस्य कलेत्यर्थ. न चाहं तथाभूता इति ।

४.१८.१२-१३ (पं) दोहडा —गोरी····सुकति । तं वा ···न मंति ॥—( ग पं ) गौरी गौरवर्णाताम्राधरेण आरक्तौष्ठेन सुकान्ता सुष्ठुरमणीया केवल न भवति, किन्तु सामली—श्यामवर्णाताम्राधरेण सुकान्ता भवतीति स्वामिनो वच॰, तत्र छलोक्ति —तंबा गौः, वसहें—वृषभेण, रमिय—सेविता, न पुनः तम्बा हरेण महेश्वरेण सेविता, हरेण पुनर्गौरी रमिता अनार्थे न कदाचिदपि [काचि० ?] भ्रान्तिः, सर्वथा सुप्रसिद्धमेतत् ।

४.१८.१४-१५ जइ साहिवि····सिंगाररसु । दूरंतरे ···विसयकसु—( ग० प० ) तत्रोद्यानवने क्रीडता[१५] जम्बूस्वामिप्रभृतीना योऽसौ शृङ्गाररस , मदनोऽपि तं यदि साहवि सक्कइ—वर्णयितुं शक्नोति, अथवा सोऽपि न शक्नोत्येव, दूरन्तरे तिष्ठतु,[१६] आरिसु[१७]—अव्युत्पन्न.[१८] अस्मदृश कवि.[१९] कथं परिजानाति, विसयकसु— —( ख ग पं ) शृङ्गारविषयविभागनिश्चयम् ।

४.१९.१ कामवेए—( ग पं.) कामस्य वेगे[१] आवेशे[२] अथवा कामवेदे[३] गुणपताकादिकामक्रीडाप्रतिपादके[४] शास्त्रे[५] ।

४.१९.६ विसइ—( ग पं ) प्रविशति, वरंगु—( ख ग पं ) नितम्बप्रदेश ।

४ १९ ८ विवरीयसुरउ—(ख ग पं ) विपरीतरत[६] ( प °रतं ) ।

४.१९.१० तलत्राइहिं ··सरीरि—( ख ग पं ) तलत्राईहिं—तरन्ती शरीरलघुत्वं स्थापयन्ती ।

४.१९ ११ उरसोल्लिकणि[७] ·· तरंग( ख ग पं ) हृदयेन पानीयपिल्लणम् ।

---

५ प पश्यामीति । ६. प °यतीति । ७ प जल° । ८ निरंतरजलस्व° । ९. प °भक्त॰ । १०. पं °मि । ११ पं मृयते । १२ पं० मृयते । १३. पं °वसान । १४. पं अतीववक्रा° । १५ प °ता । १६. पं तिष्टतु । १७ पं °सो । १८ प °पन्नो । १९ पं कवि । [४ १९] १. पं वेग. । २. पं °श॰ । ३. प °वेदो । ४. पं °पादकं । ५. पं शास्त्रं । ६. ख ग °रत । ७ पं °सेल्लिण ।

४.१९.१६ आवास तवंगु—(ख ग ) आवासं धवलगृहम् ( पं ) आवासधवलगृहे ।

४.१९.१८ जलकोल ···परिहणाहे—(ख ग पं ) जलकल्लोलैरितस्तत क्षिप्तवस्त्रायाः ।

४.२०.२ सइंछए—( ग ) स्वेच्छया, पोत्तइं—( ख ग प ) परिधानवस्त्राणि ।

४.२०.९ डुलण—( ग पं ) वेध ।

४.२१.२ दालिमालि—( ग प ) दाडिमपङ्क्तिः, मंदमार—( ग पं ) घनहृन्दवृक्षा. ।

४.२१.४ वारिकोलल्लोलसाग—( ग पं ) जलकल्लोलैरितस्ततः क्षिप्यमाणाः[1] ।

४.२१.५ भूमिभायखुडियहिं—( ग पं ) त्रोटयित्वा भूमिभागे आस्फालितैः, वकएहि—(ग) अड्डवियड्डैः, ( पं ) अडवियाडे ( हिंदी-आड़े-टेढे ), कुल्लतल्ल—( ग पं ) कुल्यासारिणी, ( पं ) तल्ल—छिल्लराणि ( हिन्दी-छिछला )

४.२१.७ वाहथट्ट—(ख ग प ) घोटकसघाता.[2] ।

४.२१.११ दोमियंग—( ग प ) दुःखिताङ्गा[3] ।

४.२१.११ गुंडि ( गोट्टुं )—( ख ग पं ) मारः ।

४.२१.१२ तरट्टिलोट्टिया—नवयौवना,[4] तरङ्गट्टिका, विसट्टवत्थ—( ख ग पं ) नग्ना ।

४.२१.१७ सदाणं—( ख ग पं ) समदम् ।

४.२१.१८ वेसा सुरंगं—( ख ग पं ) वेश्याया सुरङ्गमस्यासक्तम् ।

४.२१.१९ पई पत्तिणा—( ख ग पं ) प्रभुः[5] भृत्येन ।

४.२१.२० वियाणं—( ख ग पं ) मणिवितानम् । अथामं—( ख ग पं ) सामर्थ्यरहितम्; यक्खिट्टेन—( ख ग प ) बलवता ।

४.२२.१ नाएण—( ख ग पं ) नागेन हस्तिना ।

४.२२.३ कियदूरवीरेण पडिकारेण—( ख ग पं ) दूरीकृतप्रतीकारेण सुभटेन वा ।

४.२२.४ डमरेण—( ख ग प ) भयानकेन ।

४.२२.५ चूरियभुयंगेण—( ख ग प ) निर्दलितखेपेण ।

४.२२.६ दुव्वारवारस्स—( ख ग पं ) दुर्वाराणा दुष्टानां ( पं दुर्वाराणामयशाना ? ) वारकस्य विजेतुः ।

४.२२.१० रणरंगलुद्धेण—( ग पं ) सङ्ग्रामभूमौ जयकाङ्क्षिणा[1] ।

४.२२.१३ बंध जणतेण—( ख ग पं ) करबन्ध कुर्वता ।

४.२२.१७ कंधुद्दय—( ख ग पं ) आपीडित , [2]धुयकधु—( ख ग पं ) कम्पितस्कन्ध , विहडियसिरावधु —( ख ग प ) गलितदर्पत्वात् विघटितशिराबन्ध , संजातशिथिलसर्वगात्र इत्यर्थ ।

## टिप्पण सन्धि ५

५.१.३ आवण्णं—( ख ग ) प्राप्तम् ।

५.१.४ नियत्त—( ख ग ) प्रवर्तितम् ।

५.१.५ बालु—( ख ग ) जम्बूस्वामी ।

---

[४ २१] १ पं °माण । २. ख ग °संघातः । ३. पं °ताणाः । ४. प °वना । ५. पं प्रभु । [४ २२] १. पं °काक्षिणाः । २. पं० धुव° ।

५.१.८ एक्कु पासि—( ख ग पं ) एकस्मिन् पार्श्वे ।

५.१.१४ पायत्थवणफलएण—( ख ग प ) पादपृष्टे[ठे]न ।

५.१.१५ नक्खत्तसामिणा—( ख ग पं ) नक्षत्रस्वामिना, चन्द्रेण ।

५.१.१८ रायसासणं—( ख ग पं ) आज्ञा शासनम् ।

५.१.१९ राय''''समीहमाण—( ख ग पं ) आज्ञा प्रतीच्छन् ।

५.१.२० अमोसारुणा—( ख ग ) दूरीकरण ।

५ १.२१ सत्थाणमुवविसंत—( ख ग पं ) स्वकीयस्थाने उपविशन्त' ।

५.१ ३० सुहि—( ख ग ) सज्जन [ ' ] ।

५.२ ४ मारुयवेयवहुत्तु—( ख ग पं ) समीरणवेगादधिक वेगम् ।

५.२.६ हउं गयणगइ—( ख ग ) गगनगतिरहम् ।

५.२.११ उत्तलु—( ख पं ) उत्सुकः ।

५.२.१४ अणंगु थवइ—( ख ग पं ) कामदेवो रचयति ।

५.२ १९ मुण्डमाला—( ख ग पं ) मुकुटः[1] ।

५ २.२३ मियंके—( ग पं ) मृगाङ्केन विद्याधरेण, देवउ—( ग ) दातव्यम् ।

५.३ १ असमसाहस—( प अह-अथ, सुसाहसु )—( ग प ) साध्वससहितः ।

५ ३ ८ जिण''''संघट्टणाइं—( ग पं ) जिनभवनरमणीयत्वम्, ( पं जिनभवने रमणं रमणीयत्वं ) तेन संघट्टणं संबन्धो येषाम्, रवण—( ख ) रमणीयत्वम् ।

५.३ ९ निव्वासियाइं—( ख ग पं ) उद्वासितानि, नग्नीकृतानि वा ।

५ ३.१० रामइं—( ख ग पं ) रमणीयानि ।

५ ३.११ मारियाइं—( ख ग पं ) मरणिकया मृतानि ।

५ ३.१२ कयनीडइं—( ग पं ) कृता निनाहलादिभिः पक्षिभिर्वा नीडानि गृहाणि येषु ।

५.३.१३ तरुतीरइं—( ग पं ) तरवस्तीरेषु तटेषु येषाम् ।

५ ३.१५ परिरक्खियछलु—( ख ग पं ) परिरक्षितं छलं पौरुषं येन, वयणं यहे—( ख ग पं ) लोकवाच्यतया ।

५ ४ ४ गोहत्तणु—( ग ) पौरुषत्वम्; सव्वासु—सर्वा[र्व?]स्यापि ।

५.४.५ मणुसइय—( ग ) पौरुषत्वम् ।

५ ४.८ पासंगिउ—( ख ग पं ) प्रसंगायातम्, लहुं—( ख ग पं ) संक्षेपेण ।

५ ४.९ समउ—( ग ) समयोऽवसर, सत्तुवरे—( ख ग पं ) वैरिपर्वते, पवी—( ग ) वज्रम् ।

५.४.११ साहेज्जउ—( ग ) सहायो ।

५.४.१३ विज्जु —( ख ग ) वैद्यः; सप्पु—( ख ग ) सर्पः ।

५.४ १४ गड्डु—( ख पं ) व्यूहं, सयदिउड्डु—( ख ग ) १५० ।

५ ४ १७ अणुवलु ( ख ग पं ) साहाय्यनिमित्तं सैन्यम् ।

---

[ ५२ ] १ ख ग °टा ।

५.४.१८ समियंकु—( ग प ) मृगाङ्केन सह।

५.५.३ सव्वासे—( ख ग ) अग्नौ।

५.५.५ कप्पंतुट्टतु[1] जलु—( ग प ) कल्पान्ते प्रलयकाले भ्रमितमूर्द्ध्वकल्लोलमालाकुलित जलं यत्र।

५.५.६ समं भासिरेण—( ख ग प ) भाषणशीलेन विद्याधरेण, समं—सह।

५.५.८ विडप्परस ( ख ग पं ) राहोः।

५.५.९ वंकस्स पक्खिरायस्स—( ख ग पं ) दुष्टाशयस्य गरुडस्य।

५.५.११ भूईनिहाणो[2]—( ख ग पं ) भस्मविधान.।

५.५.१३ खेयरो—( ख ) गगनगति नाम खचर, रायहाणीं—( ग ) राजधानीम्; ( ग ) देवि पाणें—(ग) दत्वा हस्तम्।

५.५.१५ खणद्धेण दिट्ठ सहाए—( ग पं ) श्रेणिकस्य सभया क्षणार्द्धेन विमानं दृष्टम्।

५.५ १६ चित्तुत्तालें ( ग पं ) उत्सुकचित्तेन।

५.५.१७ निवेण—( ख ग ) श्रेणिकेन।

५.६.१ सरसे[1]—( ख ग पं ) सङ्ग्रामरसैकचित्ताः[2]।

५.६.२ तंतवालद्दलनिबिड—(ग) सैन्यनिबिडाः, भडथड—( ख पं ) भटसंघात, ( ग ) भट्टसंघातम्, ( पं ) भडसंघातम्।

५.६.३ आइट्ठ—( ख ग प ) आविष्टाः आकृष्टा[3] वा शीघ्रं प्रयाणके चलन्तु भवन्त इत्यर्थः; सामग्गिवावड[5]—( ग प ) प्रयाणकसामग्रीव्यापृताः[6] व्याकुला वा।

५.६.५ सवाहियकरकट्ट—( ख ग पं ) सवाहितं चालितम्, प्रयाणकयोग्य वस्तु ( ख ) °ज्ञात येषा ते।

५.६.७ पहय ...दड्डिडंवर—( ग पं ) प्रहताश्च पटुपटहाश्च तेभ्यः प्रतिरडिताः[7] प्रतिवादिताः अपि प्रतिशब्दिताः दड्डिडंवराः ढक्काख्या. वाद्यविशेषा।

५.६.८ सालकंसाल—( ग पं )विस्तीर्णकंसाल।

५.६.६ टंकार—( ग प ) शब्दः।

५.६.१० ‘गाहयं—( ग प ) निनादयुक्तम्[1], संदिण्णसमघाइयं—( ग पं) दत्तसमहस्तम्।

६.११.१४ ( ग पं ) थरगट्ठुगे....वित्थारियं—( ग पं ) सज्जियं—एतैः शब्दैः सज्जित[1]—प्रगुणीकृत[2] यत् एतैः प्रागुक्तैः [3]प्रगदितशब्दैः प्रहृतसमहस्तेन सुप्रशस्तं यथा भवति एव विस्तारित।

५.७.४ हरिखुर ...समुग्गारण्ण[1]—हरिखुरैर्त्रोटकनखैः क्षुण्णभोच्छलितेन[2] समुत्पन्नेन गगनतले गतेन।

५.७.६ जइल्लु—( ख ग पं ) जयनशीलः जययुक्त, मइल्लु[3]—( ख ग प ) मलिनः।

५.७९ डरिल्लु—( ख ग पं ) भयानक, तंडविय—( ख ) ताणितम्, ( ग ) ताडित ( पं ) ताडितम्।

५.७.१० पाखिद्धयालि—( ख ग पं ) वक्षलग्नचीरं, गरिल्लु—( ग पं ) महाघोरत्वोपेत.।

५.७.११ कसहयहरिल्लु—( ग ) तर्जनहताश्व।

---

[ ५.५ ] १ पं °धंत। २ पं °निहाणे। [ ५.६ ] १ पं °सा। २ पं °चित्ता। ३ पं °ष्टः। ४ पं °ष्ट। ५ पं °वावडा। ६ प सामग्र्य व्यावृता। ७ पं °रट्टिताः। ८ पं नायय। ९ पं °युक्तः। १० प °घायर्यं।

[ ५.६ ] १ पं °ता। २ पं °कृता। ३ पं पडगति°। [ ५.७ ] १ पं °खमुण्णएण। २ पं °च्छालितेन। ३ पं मयल्लु।

५.७.१२ सिरिजूड'''वरिल्लु—( ग पं ) सिरो जूडे बद्धं थोरिकैरिल्ल उपरितनवस्त्रं यत्र ।

५.७.१३ पयचप्पण'''तडिल्ल—( ग पं ) [4]पादयोश्चर्पणेन कृतानि विकलानि नद्योभयतटानि यानि तैरिल्ल· युक्त. ।

५.७.१४ तट्ठ—( ग पं ) त्रस्त·, नट्ठ—( ग पं ) भग्न. ।

५.७ १६ विबंधणीए—( ग पं ) विगतबन्धननिमित्तपुरुपया असहायया इत्यर्थः ।

५.७.२० मुक्काडु—( ग पं ) मुक्ताक्रन्दः ।

५ ७.२१ मज्जथट्टु—( ग ) मद्यचपक ( पं गत्र चटसः ) मद्यतृत्वा वा ।

५ ७ २४ हत्थिरोहु—( ग ) गजारोहक[5] ।

५ ७.२६ कारणु '''महल्लउ—( ख ग पं ) महदपि स्त्रीपराभवादिलक्षण[6]कारणं, महल्लउ—अतिशयेन महत् ।

५.८.७ वंसिज्झंसी—( पं ) वंसज्जाली समूह. ।

५ ८ १४ करिकाणणा—( ग पं ) हस्तिकदर्थिकाका:[1] ।

५ ८.१५ वग्घेहि गुंजारिया—( ग पं ) व्याघ्रत्रासिता[2] ।

५ ८.१६ कोलउल—( ग पं ) सूकरसंघाताः ।

५ ८.२५ विसरिस—( ग पं) परस्परानुगतः ।

५ ८ २६ हलभूमिलील—( ग पं ) कृष्टभूक्षेत्रलोलाम्[3] । संपच्च '''नील—( ग प ) संपच्यम नगोधूमैर्नीला भवति, सस्यमानगवा[4] धूमैश्च[5] नीला भवति ।

५ ८ ३१ विंज्झाडई भारहरणभूमि व :—

( i ) सरहभीस—( ख ग पं ) भारतरणभूमि. सरथा रथसमन्विता, भीसा–भयानका; विन्ध्याटवी तु शरभैरष्टापदैर्भयानका[6] ।

( ii ) हरि '''डोस—( ख ग पं ) भारतरणभूमौ हरिर्वासुदेव·, अर्जुनो, नकुलः शिखण्डी च पाण्डवबले राजपुत्रविशेपाः एते दृश्या भवन्ति; विन्ध्याटव्यां तु हरिः–सिंह·, अर्जुनो—वृक्षविशेप , नकुल —प्रसिद्ध , शिखण्डी—मयूरः एते दृश्या भवन्ति ।

५.८.३२ (iii) गुरु '''चार—( ख ग पं ) भारतरणभूमौ गुरुर्द्रोणाचार्यः तत्पुत्र. अश्वत्थामा, कलिङ्गः कलिङ्गदेशाधिपति राजा, एतेपा चारः—चेष्टा भवति, विन्ध्याटव्यां तु गुरुर्महान् , अश्वत्थः —पिप्पलः, आमः—आर्द्र ,[7] कलिंगा—वल्य , चाराः वृक्षविशेपा· भवन्ति ।

(iv) गयगज्जिर सार—( ख ग पं ) भारतरणभूमौ गजगर्जिरा[8] सारा भवन्ति, सशराः बाणसमन्विता , महीशाः राजान., ते. सारा भवन्ति यत्र, विन्ध्याटव्यां तु गजगर्जिताः,[9] ससरा—सरोवरसमन्विता., महीमसारा—महिपा. सारा भवन्ति यस्याम् ।

५.८.३३ विंज्झाडई लकानयरी व ·—

( i ) सरावणीय—( ख ग पं ) लङ्का रावणसहिता भवति; विन्ध्याटवी तु सरावणीया—रावणवृक्षविशेपसहिता भवति ।

---

४ पं पादो चप्प° । ५ प मेहिला (?) । ६ पं °लक्षण । [ ५ ८ ] १ प °कदर्थिक । २ पं °वासिताः । ३ पं °लोला । ४ पं गवं । ५ पं धूमैः । ६ पं °पदैर्भीसा । ७ पं सार्द्र. । ८ ख °गज्जिता । ९ पं °गज्जिरा ।

(ii) चंदणहिं····°वणीय—( ख ग पं ) लङ्कानगरी चन्द्रनखाचारेण चेष्टाविशेषेण कलहकारिणी भवति, विन्ध्याटवी तु चन्दनैः चन्दनवृक्षविशेषैः[10]श्चारैः चारवृक्षैः वा मनोज्ञैः कलभैः लघुहस्तीभिर्युक्ता[10] भवति ।

५.८.३४ (iii) सपलास ···थट्ट—( ख ग पं ) लङ्कानगरी सपलाशा, पलाशैः राक्षसैर्युक्ता,[11] सकाञ्चना, [12]अक्षयकुमारो रावणपुत्रस्तेन[13] युक्ता, विन्ध्याटवी तु पलाशवृक्षसमन्विता, सकाञ्चना-मदनवृक्षविशेषसहिता, अक्षा —विभीतकवृक्षाः ते तच्छा [ तत्स्था ? ] यत्र ।

(iv) सविहीसण····रसड्ढ—( ख ग पं ) लङ्कानगरी विभीषणसहिता भवति, विभीषणो रावण-भ्राता, कइउल—कपीना वानराणा, कवीना काव्यकर्तॄणा वा कुलानि—सघाता ( पं कुलैः सघातैः ) तैः समन्विता, फलानि रसाढ्यानि, [14]एतैः सहिता,[14] विन्ध्याटवी तु सविहीसणा —नाना विभीषिकाभि सहिता भवति, वानरसंघाता [सघातैः सहिता] फलरसाढ्या च ।

५.८.३५ विंज्झाडई कंचायणिव्व :—

(i) द्वियकसणकाय—( ख ग पं ) कात्यायनी-चामुण्डा घृतकृष्णकाया भवति, विन्ध्याटवी तु [15]धृतकृष्णकाका ।

(ii) सद्दूलविहारिणि—( ख ग पं ) कात्यायनी तु शार्दूलेन वाहनेन विहारिणी—विहरणशीला, विन्ध्याटवी तु शार्दूला विहारिणो यस्याम् ।

(iii) मुक्कनाय—( ख ग पं ) कात्यायनी मुक्तनादा, मुक्तफेत्कारा; विन्ध्याटवी नानाजीवै-र्मुक्तनादा च ।

५.८.३६ विंज्झाडई तिनयणतणुव्व :—

(i) दारुवणछंद—( ग पं ) त्रिनयनो महादेवस्तस्य तनु, छन्देन-गौर्या अभिप्रायेण नानाछ दैर्नर्तित, दारा ( पं दारु ) भवानी [16]गौरी, तस्याः दारुणिकः नृत्यो भवति, विन्ध्याटवी तु दारुभिः काष्ठैः पवनैः पलाशैः छद्मा—प्रच्छादिता ।

(ii) गिरिसुय··· खंडचंद—( ख ग पं ) त्रिनयनतनु गिरिसुतायाः[17] गौर्या, जटाभिः कन्दलैः —कपालखण्डैः, खण्डचन्द्रेण च सहिता[ °ता ? ]भवति, विन्ध्याटवी तु गिरिभिः, शुकैः, जटाभिर्नानामूलैः कन्दलैरङ्कुरविशेषैः, खण्डकन्दैश्च सहिता भवति ।

५.८.३७ परिसक्कइ—( ख ग पं ) अग्रेतनभूमिमाक्रामति, छइल्लु—( ख ग प ) विदग्ध ।

५.९.२ गामार वि—( ग पं ) कुटुम्बिका अपि ।

५.९.४-५ जहिं गोवाल व गोवाल—( ग प ) यत्र देशे गोपालाः गवा रक्षकाः,[1] गोपाला इव—राजान इव ।

(i) महिसी···अहिं—( ग प ) राजानो हि महिष्यां अग्रमहादेव्यां बद्धस्नेहा भवन्ति गोपालास्तु महिष्या धेन्वा च बद्धस्नेहा भवन्ति ।

(ii) कमलायरगयसाल—( ग प ) तथा राजान कमलाकराः कमलायाः लक्ष्म्या आकराः गजशालायुक्ताश्च भवन्ति; गोपालास्तु कमलाकरात्[2] पद्मिनीखण्डमण्डितसरोवरात् शालीन-विशालगुणान्[3] गताः महिषीणा तत्र रतिसद्भावात् (?) ।

५.९.७ कद्दंदइं—( ख ग पं ) पद्मानि, कमलानि ।

---

१० प °श्चारैः कलभो लघु° । ११ प °युक्तः । १२ मं अक्षय° । १३ प °पुत्रस्तयो । १४ प यत्र । १५ पं घृताः । १६ पं गौर्या । १७ ख ग °सुतया । [५.९] १ ग °णाः । २ प °करा । ३ प °गुण ।

५.९.८ कीरेहि—( ग पं ) कीरैः शुकैः, ट्ठिया—आगता. [ °ता ]।

५.६.६ कणइल्ल—( ख ग ) शुका., ( पं ) शुकः ।

५.६.१२ जनवेस—( ख ग पं ) जनवेषो, जनाना वेष. शरीराकारः ।

५.९.१४ लालिया—( ख ग पं ) सन्मानिता.[४] ।

५.६.१५-१६ सेविज्जइ कंतारउ—( ख ग पं ) कान्तारतम्, गण्डकविशेषश्च सेव्यते, कथंभूतं तत् ? कोमल-बहुरसु—( ग पं ) तदुभयकोमलं बहुरसं च, किं कृत्वा ? मेल्लिवि ( ख ग पं ) परित्यज्य, परवसु—( ख प ) विगतस्वादुरिति, किं तत् ? वेसायउ—( ख ग पं ) वेश्यारतम्, किमिव ? उच्छुव—( ख ग पं ) इक्षुरिव, कथभूतम् तत्—( पं ) विगतस्वादं इक्षुस्वरूपं वेश्यास्वरूपं च, कयथक्कउ—( ख ग पं ) क्रये मूल्ये स्थितं च उभयं च; तथा निट्ठुर—( ख ग प ) निष्ठुरं, निस्नेहं ( पं निस्नेहलं ) अकोमलं च, वंकउ—( ख ग प ) वक्रम्, वैशिकप्रधानम्, ( पं रतिकप्रधानम् ) अप्राजलं च, गंठिहु भरिउ—( ख ग पं ) ग्रन्थिभि हृदयकुटिलभावैः प्रचुरपर्वविशेषश्च भृतम्, सखारउ[५]—( ख ग पं ) पूर्वभागं पश्चाद्भागं उभय-मपि सेव्यमान मधुररस न भवति ।

५.१०.१ संदण—( ग ) रथा., ( पं ) रथः ।

५.१०.४ मणिट्ठ—( ग पं ) चित्ताह्लादजनका ।

५.१०.८ पुळिण "'कच्छो ( ग पं ) पुलिनस्थानेषु निवेशिता कच्छो यथा ।

५.१०.६ गंधंद्धिर—( ग ) गन्धे अत्याश[स]क्ताः ; ( पं ) गंधधिय—( पं ) स्वं चिरं गन्धेनाऽतिशयेन अत्याश[स]क्ता. ।

५.१०.१० चहरी—( ख ग पं ) दरमलिता ।

५.१०.११ [१]कुलुक्कगिरिंदु—( ग पं ) कुलपर्वत.[२], निववाहिणि—नृपसेना ।

५.१०.१८ सूइज्जइ—( ग पं ) सूच्यते ।

५.१०.२२ वल्लि ( पं वेल्लि )—( ग प ) मन्दुरा ।

५.१०.२४ रेवाणए कण्णए—( ग पं ) रेवानदीसमीपे ।

५.११.६ ( पं ) गुणेल्लिका—( पं ) गुणतणिका ।

५.११.१० ( पं ) आर्या; कमालु—( ख ग पं ) कोलाहल ।

५.११.१६ तमारि—( ख ग पं ) आदित्य. ।

५.११.१६ रयणचूलु—( ख ग ) रत्नशेखर. ।

५.११.२२ पहुण्णउ—( ख ग ) शीघ्रगति ।

५.१२.८ समत्त—( ख ग ) समस्ताः सर्वा ।

५.१२.१४ करजुयलु "कमलकंबु—( ख ग पं ) करकमलेषु उद्भासितौ लक्ष्यतया शोभितौ, कमलकम्बू-पद्मशङ्खौ यस्य ।

५.१२.१८ पीणखधु—( ख ग पं ) उन्नतस्कन्ध ।

५.१२.२० रेहा न होइ—( ग पं ) हुंकारः चिह्नः न भवति ।

५.१२.२३ सावलेउ—( ख ग पं ) सदर्प. ।

---

४ प °निता । ५ पं सखारं । [ ५.१० ] १ पं कुलु° । २ प °पर्व्वत । [ ५.१२ ] १ पं लक्ष° ।

५.१२.२४ अणयायारु—( ग ) अन्यायाचारम्, ( पं ) अन्यायपर ।

५.१३.२ निद्दवि । छायहो—( ग पं ) निराकृतमाहात्म्यस्य ।

५.१३.३ ढ्य—( ग ) आगत ।

५ १३.६ दंडकरंबिउ—( ख पं ) दण्डगर्भित ।

५.१३.१० पलि त्तउ—( ख ग पं ) कोपाग्निना प्रज्वलित ।

५.१३.१२ वओहरु—( ख ग पं ) दूतः ।

५.१३.१४ खयरविस रेस—( ख ग प ) प्रलयकालाङ्गिरसदृशः ।

५ १३.१७ अयसु ···समुच्चयवंसे[1]—(ख ग पं) अयशोऽपकीर्तिरेव, सम्यगुच्चवंशो—महावंश तस्मिन् तत्र वा।

५.१३ १६ पढम···रंजइ—( ख ग पं ) प्रथमतो विवेक पापमेव रसस्तेन रज्यते, मलिन क्रियते ।

५ १३.२० पहिल उ····डकइ—( ख ग पं ) योऽपौ एतदीय. काल एव [2]सर्पं प्रथमतो मनो ग्रसति ।

५.१३.२२ दस्मइ—( प ) उपशाम्यते ।

५.१३.२३ जित्तु जि एण वि—(ग) कोपाग्निना अयं जित , ( प ) जित्थु ज एण जि—( पं ) निर्जितेनापि, कोपाविना अयं जिन ।

५.१३.२६ जउ ठवहि—( ग पं ) जय स्थापयति ।

५.१३.२६ रहुवइ—( ख पं ) श्रीराम ।

५.१३.३० कायहो—( प ) काकस्य, तो किं—( ख ग पं ) ततः आकाशगामित्वम्[3], सो जिज—(ख ग पं) स एव काक , थाणु गुणमायहो—( ख ग पं ) स्थान गुणविभागस्य, गुणवत्तायाः[4] ।

५.१३.३३ अक्खहि—( पं ) कथय ।

५ १४.३ अवस' कयंतहो—( ग ) तेन यमदिशि कृतमित्यर्थः ( प ) तेन यमदेसे [देशे°] कृ त्यमित्यर्थ ।

५.१४.१३ असिदुहिय[1]—( ग प ) छुरिका, छुहदुहिय—( ख ग पं ) क्षुधादु खिता, ( प ) वरवमुकारकः । (?)

५.१४.२१ अवहत्थ—( ख ग प ) शत्रोरभिघात , समहत्थ—( ख ग प ) वामपार्श्वे शत्रोरभिघातः, दढकाकवट्टेहिं—( ख ग प ) [2]अभिमुखे शत्रोरभिघात[2], करिदाण—( ग प ) हस्तिदन्तवेध[3]वंमे गल कसि[°त्ति ?]कया खड्गमुनासिकया च अधोमुखेन भूत्वा शत्रोरभिघात , रुढ.ण—( ख ग पं ) उपविश्य शत्रोरभिघात , कुम्मासणट्ठेहिं[4]—( ख ग प ) सपक्ष रथ हस्ति-घोटकाना कूर्मासनेन करचरणाभिघात ।

५ १४ २२ पच्चाणणालोय—( ख ग पं) सिंहावलोकनेन अग्रेतनशत्रूणा क्रम दत्त्वा प्राक्तनशत्रुहनन, मिग···पाएहिं—(ख ग प ) मृगवत् अग्रकृतपादे क्रमेण अग्रेतनशत्रुभूमिमाक्रम्य शत्रुहनन, सविंगास—( ग प ) वामपार्श्वे फरक दत्त्वा खड्गं पृष्ठप्रदेशे तिरोहित कृत्वा आत्मान निरवधान शत्रोः प्रदर्श्य निरवधानोऽयमिति विश्वासेन हननार्थमागतस्य शत्रोरभिघातः सविश्वास , संकोय—( ग प ) चक्रामूत शत्रुभिरभिहन्यमान. [5]शिरसि फरकं दत्त्वा शत्रोरभिघात. सकोच , अवसारघाएहिं[6]—( ग प ) शत्रुभि अक्षत्रेणा [°वन° ?] भिहन्यमान. झटिति तान् हत्वा [हन्त्वा ?] स्थानान्तरे अपसरण सक्रमण अपसारघात ।

[५ १३ ] १ प °वसो । २ प समर्थः । ३ प °गामित्वाक्षि [ °ङ्खि ? ] । ४ प °वनाया । [ ५.१४ ] १ प °दुहिया । २ प अभिमुखशत्रुऽभि° । ३ पं °वत्तु अथवा वन्नु, यो वन्नुनेगलकत्ति° । ४ प °सण सगृहु । ५ प शिरछि. । ६ प अवसरे ।

## सन्धि–६

६.१.१ दंत—( ख ) दन्त, सव्वस्सं—( ग प ) सर्ववनम्, ( पं ) साटकछन्दः ।

६.१.३ हत्थे चाओ इत्यादि—( ग ) साटकछन्दः ।

६.१.४ वच्छे सच्छा पवित्ती—( ख ग प ) हृदये निर्मला प्रवृत्तिः ।

६.१.५ कण्णाणेयं इत्यादि—( ग ) [1]अन्यार्थे अन्या स्थितिः, सप्तम्यर्थे षष्ठी, कण्णाणेयं—( ख पं ) कर्णेष्विद, सुयसुयणड्ढणं—( पं ) आकर्णितश्रुताश्वारणम्, दोळयाणं—( ख ग पं ) दोलॅंड्रासु, बाहुलतासु, बाहुदण्डेष्वित्यर्थः ।

६.१.६ सहज ''कज्जमण्णं—( ग पं ) सर्वदा पुनः सहजपरिकरो भवति, किन्तु [सांप्रतम् ? ] कार्यमन्यत् उत्तरकालीनम् ।

६.१.७ केरलनिवे धरिए—( ख ग पं ) सिद्धावलोकनन्यायेन वचनम्, विजयंतरिए—( ख ) विजयेन अन्तरिते, ( ग पं ) विजयेन अन्तरितेन [2]हरिषितीत्यर्थः (?)

६.१.१० उव्वेविए—( ग पं ) अस्तो व्यस्तम् ।

६.१.१६ सरायउ—( ख ग पं ) राजासहितम् ।

६.१.१८ कडए—( ख ग पं ) कटके ।

६.२.३ करवालकेरए—( ख ग पं ) खड्गसम्बन्धिनी ।

६.२.४ लीलबोलियं—( ख ग पं ) अतिशयेन बोलितम् ( ) भुयण''' तोलियं—( ख ग प ) भुवनभार-भाराभ्यां, भुवनभारधरणसमर्थाभ्यां भुजाभ्यां तोलितम् लीलया आकलितम् ।

६.२.६ रत्तपीत्त'' रंडियं—( ख ग पं ) रक्तानि पीतानि वस्त्राणि धरन्ति या ता रामाश्चैता रण्डिता यत्र ।

६.२.८ रणरसिय—( ख ग पं ) समररसिका. संग्रामरसिका इत्यर्थः ।

६.२.९ तुट्टंत 'सट्टउ—( ख ग पं ) अतिपौरुषात् समुत्पन्नरोमाञ्चकञ्चुकेन तुट्टन्ते ( ग तुटन्तो, पं तुट्टते ) ये कवचा. ते भूमौ प्रविष्टा. ।

६.३.३ कय—( ख ग प ) क्रयेन, मौल्येन ।

६.३.१० अगलियखग्गफर—( ख ) खड्गहस्तात् अपतित , ( ग ) अगलितखड्गखेडक. ।

६.६.१० कय-सिरउ—( ग पं ) [1]शिर शब्देन मस्तकं मस्तककेशाश्च ( पं केशाश्चारमरतरजश्च ? ), सरसव्वणु—( ग पं ) सरसाः व्रणाः जाता यत्र रणे यौवनं च सरसव्रणम् ।

६.६.११ नह—( ग प ) नखानि, नभश्च, हियउ ( ग पं ) चित्तं उरश्च ।

६.८.२ हा महु '''वंससेसु—( ग पं ) सर्वेऽपि शत्रवो मया निर्मूलिता., [1]तदीयगृहस्थितापत्यमात्रावस्थानात् वंशशेषा.[3] ( ग ) 'कृताः वैरिण इति, इदानीं तेषां संग्रामे युद्धमानानामुपलम्भ विस्तरयति' ( ख ग ) 'हा वैरिणो न जाता वंशशेषा इति' ।

६.८.३ निभुत्तु—( ग पं ) निस्तीर्णम्, सुयइ—( ख ) सुपति [ स्वपिति ? ] ।

६.८.५ मज्झ सुहनिहाणु—( ख ग पं ) मदीयप्रभोपकारित्वात्[4] सुखनिधानमयं[5] पक्षः[6] ।

[ ६.१ ] १ पं °र्थो । २ पं हरिसतो° । [ ६.६ ] १ ग शर । [ ६.८ ] १ पं त्वदीय । २ पं °स्थिता.° । ३ पं °शेषा । ४ प °कारत्वात् । ५ पं °विधान° । ६ ख ग पक्षः ।

६.८.७ सिरु ···सक्कु (ख ग पं) यद्यपि शिरो दत्तम्, तो वि-तथापि, स्वामीप्रसादऋण[7] स्फेटयितु न शक्त इति, सामिय····थक्कु—(ख ग पं) स्वामीप्रसादऋणशेषस्य सद्भावात्।

६.८.८ अंतावलि···लद्धबंधु—(ख ग प) अन्त्रावलिनिगडैर्लब्धबन्ध.।

६.८.९ पलासहं[8]—(ख ग प) मासाशिना राक्षस-पक्षिप्रभृतीनां।

६.८.१० महिहे वण्णु[9]—(ख ग प) पृथिव्यामात्मीयगुणव्यावर्णना दत्ता।

६.८.११ उर-सिर-सरीर—(ग प) उर. शिर. शरीरं च, सव्वचूरिउ—(प) सर्वमपि चूरितम्, स[ष]वस्य वा मृतकस्य चूरितम्।

६.९.१ समसत्तइं (पं६ संतइ)—(ख ग पं) हीनाधिकस्वरहितानि।

६.९.३ अवलंबियसत्तइं—(ख ग पं) स्वीकृतपौरुषाणि, अपरित्यक्तवीरवृत्तीनीत्यर्थः।

६.९.६ चोरविय—(ख ग पं) चूर्णीकृताः।

६.९.९ रसवविय पलासइ[1]—(ख ग पं) रुधिरप्रीणितानि राक्षसानि।

६.१०.१ गरुयनाथ—(ख ग पं) महानाद (पं) महाहस्तिमदच।

६.१०.३ खंड···वेयण्ड—(ख ग पं) खण्डा सोण्डा येषा ते च ते वेदाण्डाश्च (ग प वेयदडाश्च) ते चण्डास्ते, भिंमले—(पं भेमला)—(ख ग प) विह्वला भयानकाश्च यत्र (प), भीमले—(पं) भयानके।

६.१०.४ कडविमद्दगे—(ख ग प) महासंग्रामे।

६.१०.५ घडिय[1]—(ख ग पं) घृष्टा, अन्योन्यसलग्ना; गयणगमण—(ख ग प) गगनगति.।

६.१०.६ लच्छिलक्ख—(ख ग पं) लक्ष्म्या उपलक्षितो[2] लक्ष्म्या वा लक्ष्यो[3]।

६.१०.८ मणिसिहेण—(ख ग पं) रत्नचूलेन।

६.१०.९ निरत्थु—(ख ग प) अस्त्र (प शस्त्र) रहित, आयुधहीन; जउ मुणेहु आहणेइ—(ख ग पं) वेगेन घातयामीत्यर्थ।

६.११.१ वणियसत्तु—(ख ग पं) व्रणितशत्रुः।

६.११.५ सलेव—(ख ग पं) सदर्प, आरोहु—(ख) रथवाहिमहावन्त [°वत ?]

६.११.८ निसिंस—(ख ग पं) खड्ग।

६.११.१० जंमुहलोयणेण—(ख) सन्मुखलोचनेन।

६.१२.२ इय···बंधु—(ख ग प) गगनगतिना सदृश. समान. कथ बन्धुरपि भवति, अपि तु न भवति।

६.१२.४ रज्जु—(ख ग पं) राज्यम्, रज्जु—(ख ग पं) दोरः।

६.१२.१० ओवडिय—(ख ग) उच्छरिता, प च्छरिता।

६.१३.२ बलुद्धर—(ख ग पं) बलोत्कट, रसड्डिय[1] वीररसेन आढ्यभूताः।

६.१३.३ रणंगण ...वच्छ (ख ग प) रणाङ्गणेन संग्रामेन, सङ्ग.-सबन्ध, तेन विलसित वक्ष—हृदयं ययो सग्रामदत्तहृदयौ (°या) इत्यर्थः, दच्छ—(ख ग प) संग्रामकुशला [°लौ]।

---

७ प °रिण। ८ प °सहिं। ९ पं महिहिं वन्नु। [६.९] १ प रसवविय°। [६.१०] १ प °या। २ पं °लक्षिताः। ३ प °लक्षाः। [६.१३] १ प रसड्ढिय।

६.१३.५ तमारि—( ख ग पं ) आदित्य. ।

६.१३.७ घसक्किय—( ख ग पं ) परस्परं तेषां घातनं विलोक्य ( पं घातनमवलोक्य ) घमुक्यते, कस्यानयोर्मध्ये जय. इति संशयतुलारूढा ।

६.१४.३ तिव्वातवेण—( ख ग पं ) तीव्रातपेन ।

६.१४.१३ कबंध''''नच्चाविय—( ग पं ) कबन्धा बन्धेन—[1]प्रबन्धेन तूर्येन[1] नृत्यं कारिताः ।

६.१४.१५-१६ पहि ''वसेण—( ग पं ) प्रतिभटखड्गाधीनेन[2]; खडियाकसेण—( ग पं ) खटिकेव कशः स्वामिरिणनिस्तरणपरीक्षाया कसवट्टः, रणमहि''''विरिथिण्णउ अंकनिरंतरउ—( ग पं ) कडित्तं रिणस्यमूलकरन्तरसूचकं एकत्वादिसंख्याविशेषरूप कतितरं भवति, रणमहिकडित्तं तु अङ्क. परस्परं युद्धैनिरन्तरं भवति । सकलंतरउ—( ग पं )पकलन्तर, [3]प्रभुदत्तप्रसाददानमानादिकं तरां(?) प्रभुकार्यकरणात् सकलन्तरं रिणं [ ऋणं ] दत्तम्, साम्भिरिणु—( ग ) स्वामिरिणं [ °ऋणम् ] ।

## संधि ७

७.१.१ ( पं ) °महुणा—( ग ) प्रतिमौल्येन ।

७.१.४ गिरइ—( ख ग पं ) प्रतिपादयति; नेम्मि[1]—( ख ग पं ) परिमिति. ।

७.१.१७ तं—( ग पं ) मग्नदर्त्तं; सेयइ डाइणि—( ग पं ) स्वेदते डाकिनि; कथा (?) कथंभूतया ? भल्लुक्कि समरसाइं—( ग पं ) भल्लूकीमुखाग्निकृतोष्णया[2]; नरवस इं—( ग ) [3]नरवसया [? ]

७.१.१८ दिण्णसंक—( ग पं ) भयजनकाः[4] ।

७.१.२० ( पं ) हेइलक्खण—( पं ) प्रहरणलक्षाः ।

७.१.२१ चरमतणु—( ख ग पं ) जम्बूस्वामि; हड्डरुंडविच्छड्डिर—( ख ग पं ) सर्वतो विक्षिप्तहृदरुण्डा.[5] ।

७.१.२२ बहुरुसघणउ—( ख ग पं ) प्रचुररक्तनिरन्तरम् ।

७.२.२ बहुपहरण—( ग पं ) बहूनि प्रहरणानि ।

७.२.९ मडलग्ग—( ग ) खड्ग, ( पं ) खड्गाग्रम् ।

७.३.१ पडहडमरु ( पं समर० )—( ग पं ) महासंग्रामाटोपः ।

७.४.१२ तियक्खस्स—( ग पं ) त्रिलोचनस्य ।

७.४.१३ णिमिसं ( निमिसं )—( ग ) निमेषमात्रमपि ।

७.४.१५ खरं खारियं—( ग पं ) अतिशयेन परिभवितम् ।

७.५.३ परिवडिय[1]—( ग पं ) परिपतित[2] ( °ता ) ।

७.५.४ गयणवहपहय—( ग पं ) वायुप्रहत[3] ।

७.५.८ समरु परियरवि—( ग पं ) संग्रामं स्वीकृत्य ।

---

[ ६.१४ ] १ पं सातत्येन । २ पं० धीतेन । ३ पं प्रभुदत्ते° ।

[ ७ १ ] १ प निम्मि । २ ग °ग्निकृतोष्णया । ३ प नरेवासाए । ४ ग °जनिका । ५ प °रुडः ।

[ ७ ५ ] १ पं °वडिया । २ पं °पतिता । ३ पं °प्रहतं° ।

७.५.६ खयविसम··· णिहो—( ग पं ) क्षयकालरौद्रयमसदृश ।

७.५.१२ समयतडिफिडवि[4]—स्वमर्यादातटमुल्लङ्घ्य[5] ।

७.५.१५ कलि····मरट्टई—( ग पं ) कलिकालेन कृतान्तेन च तुल्यो मरट्टो गर्वो येण ते ।

७.५.१६ पुणु—( ग पं ) पुनरपि ।

७.६.७ विरस—( प ) भयानकाः ।

७.६.१२ सुरसुंदरी ···कुमरं—( ग पं ) सुरसुन्दरीदर्शितमूर्छोऽज्ञो मध्य येषा तानि[1] उद्भ्रान्तानि नयनानि येषा ते च उल्लिताश्च—पतिता सामन्तकुमारा.[2] यत्र ।

७.६.१३ लंबंतचूल—( ग पं ) लम्बंत-चुञ्चल, पविहच्छकच्छ—( ग पं ) किरिविलव छुटक ।

७.६.१४ अलद्ध ··णिम्माणिय—( ग पं ) प्रभो-सकाशाद्यत्र कव्यसम्मानास्तिता[3] प्रभुकार्यं न कुर्म इत्य-भिमानरहिता ; सच्चविय—( ग पं ) प्रकाशिताः ।

७.६.१४[4] णिसग्गचारहडिय—( ग पं ) सहजपौरुषम् ।

७.६.१८ कसरेसु····गहवइणो—( ख ग पं ) कसरेसु कर्बुरेषु बलीवर्दवर्गेषु यत्प्रतिपालनं तस्मात्पृष्ठत:[5] प्रति-लग्नास्ते वर्गा यस्य धनिकस्य ।

७.६.२५ गरुयभर····एक्को ( ख ग पं ) एकाकिनो मे भरोद्वहने समर्थस्य अकिंचित्करोऽयं[6] प्रतिभारो द्वितीयभर एक केवल भविष्यति ।

७.६.२६ समसीसियाए[7]—( ख ग पं ) समस्पर्द्धया ।

७.६.३० ( पं ) डोहडा सीहसिलिंवु—( ख ग पं ) सिंहशावकम् ।

७.७.५ हेवाइउ—( ख ग पं ) गर्वितः ।

७.७.८ किं बलवलेण—( ख ग पं ) किं सेन.बलेन ।

७.७.१२ ( पं ) अवसन्नदइ[1]—( पं ) परित्यक्तसन्नद्धास्वरूपाणि ।

७.८.१ सरवंत्तइं[1]—( ग पं ) बाणाः, तोणहिं[2]—( ग ) भस्त्रासु, ( पं ) भस्त्रासु ।

७.८.१० टलकिंय[3]—( ग पं ) टलटलितानि ।

७.८.११ दुवक्कीय—( ग पं ) मीता. ।

७.८.१३-१४ गाढवि····इत्यादि —खयरें—( पं ) रत्नचूलविद्याधरेण, मग्गणवीसविसज्जिय—( ग पं ) विंशतिमर्गिणा -त्राणा. विसज्जिता , किविणेण व—( ग पं ) कृपणेन इव, किं कृत्वा ? गाढवि····धणु—( ग पं ) गाढमाक्रम्य करेण धनु ( प ) स्तानक-विशेषेण, वकैवि तणु—( ग पं ) तनुं वक्रं कृत्वा—( पं ) मार्गणा विसर्जिता ।

७.११.६ सीसइ—( ख ग पं ) कथयति ।

---

४ पं °फिडिवि । ५ प °मर्यादातटी° । ६ प मड गर्व्वो । [ ७.६ ] १ प ऊर्द्धा° । २ पं °कुमारा । ३ ग °नाश्रिताः । ४ पं णोसग्ग° । ५ प °पृष्ठतः । ६ प व्यग्रमकिंचित्करो । ७ प °याइ । [ ७.७ ] १ प्रतियो में °सण्णदइं । [ ७.८ ] १ प्रतियोमें °वत्तहिं । २ प्रतियो में तोणइ । ३ प टल° ।

सन्धि ८

८.१.८ थावउ—( ख ) स्वीकारं करोतु ।

८.२.६ नामदेवोत्तर—( ख ) भवदेवः ।

८.२.१३ जलकंत—(ख ग ) नाम्नि [ विमाने ] ।

८.३.६ सावयं—( ग ) श्रावकं श्वापदंश्च ।

८.३.७ सलक्खणु रामधरु—( ख ग ) लक्ष्मणेन सहितो राम , लक्षणसहिताः रामाश्च; नट्ठपरु—( ख ग ) नष्टः परमार्थः, नष्टशत्रुश्च ।

८.३.८ बहुवाणिउं—( ख ग ) बहुवाणिजम्, बाहुपानीयं च ।

८.३.९ दोणु—( ख ग ) द्रोणाचार्य., मापविशेषश्च ।

८.३.१५ सुपइट्ठिय—( ख ग ) सुप्रतिष्ठो नाम राजा ।

८.४.११ सउहम्म—( ख ) सौधर्मः ।

८.५.१४ सुहु—( ख ) शुभमनन्तचतुष्टयम् ।

८.७.२ आउच्छेविणु—( ख ग ) पृष्ट्वा ।

८.७.३ अम्मि ( ख ग ) मात. ।

८.७.७ जसहंसु—( ख ) परब्रह्म, ( ग ) यशोहंसः ।

८.७.८. पयापरिपूरणेण—( ख ग ) उदरपूरकेण[१] ।

८.९.२ वरताई—( ख ग ) वरपित्राः ।

८.६.६ अघडियउ—( ख ) अघटमानवस्तु ।

८.१२.१ तो''''न वज्जियं—( ख ) सयणान् वचनं जम्बूस्वामिना [ न ] लङ्घितम् ।

८.१२.३ उण्णामउ—ऊर्णामयम् ।

८.१२.७ कण्णावरि—( ख ग ) कन्याप्रतिपक्षे ।

८.१२.८ बहुकरसंगहो—( ख ग ) पाणिग्रहणं वधूनां वा करेण सङ्ग्रहो यस्य ।

८.१२.११ चेल्लिउ कंचिवालु—( ख ग ) काञ्चीदेशनिष्पन्नपटपरिधानम् ।

८.१३.३ कायमाण—( ख ) कइवाणं ( ? )

८.१३.४ पहंजण—( ग पं ) पवनः ।

८.१३.५ कोवुण्हविय—( ख ग ) ईषदुष्णीकृतम् ।

८.१३.१४ भियाणखणे—( ख ग ) भोजनावसानसमये ।

८.१३.१५ पेम्मघवक्कउ—( ग पं ) प्रेमपुञ्जसदृशम्, विशेषणमिदम्; कइय''''परिहरि:—( ग पं ) आहारमागतं भुक्त्वावसाने त्यक्तमित्यर्थः ।

८.१४.२ दरुण्हयं—( ग पं ) ईषदुष्णम् ।

८.१४.५ सेविय महुमत्तउ ( पं मयमत्तउ ) निवडइ—( ग प ) षट्पदैः संबन्धः; मद्यपाल इव आदित्यो निपतितः[१] मद्यपालो हि मधुना निपतति, आदित्यस्तु सेवितकमलकोशमकरन्देन-मद्येन-( पं ) मधुना मत्तो

---

[८ ७] १ ख °पूरणेण । [८ १४] १ पं °तितो ।

निपतति; गलियनियंसु वि—( ग पं ) मद्यपाल· गलितनिजांशुकः पतितनिजवस्त्र·, आदित्यस्तु गलिता निजांशुकाः किरणा यस्य स तथोक्त·, रत्तउ—( ग पं ) अनुरक्तः ।

८.१४.६ लग्गेत्यादि—( पं ) लग्नमादित्य प्रेक्ष [ प्रेक्ष्य ? ], क्व लग्ने ? अत्थ····वणराइहे—( ग पं ) अस्तशिखरि[2]वनराजिकाया ; कथभूताया· ? [3]सिलायड·· विराइहे[3]—( ग पं ) शिलातलमेव रमणं गुह्यं तेन विगलिताया , तं तथाभूतम् आदित्यम्, पेक्खेवि—( ग पं ) दृष्ट्वा ।

८.१४.७ ईसाइवि—( ग पं ) ईर्ष्यां कृत्वा; पच्छिमदिसपत्तिए असहतिए—( गं पं ) पश्चिमदिशिपत्न्या भार्यया असहमानया, किउ ··मुहु—( ग पं ) कोपेन कृत आताम्र मुख सन्ध्यारागव्याजेन, तेन चास्तमनं [4]कुर्वता ।

८.१४.८ तेउ हुयासें—( ग ) तेजो अग्निना ।

८.१४.२०-२१ विरहग्गिफुलिंग—( ग पं ) विरह एव अग्निस्तस्य स्फुलिङ्गा ; जोइंगण—(ग पं ) ज्योतिर्गणकव्याजेन, छड्डिय—प्रसृता ।

८.१५.१ अहिसारोहिं—( ख ग पं ) अभिसारिकाभिः, पुंश्चलीभि ।

८.१५.३ हेमेयउ—( ग पं ) सुवर्णनिर्मिताः ।

८.१५.४ गयवइ··· सहुं—( ग पं ) गतभर्तृकाहृदयैः सह ।

८.१५.६ धुद्धउ—( ग पं ) धवलम् ।

८.१५.९ किहइ—( ग प ) आस्वादयति ।

८.१५.१० मुद्धमुहिय—( ग पं ) मुग्धमुखो; करवावड—( ग पं ) करास्तद्गुणव्यावृत्ता[1] यस्या. ।

८.१५.१२ नियडाउ निवासए—( ग पं ) गृहसमीपे, उच्चिणंति [2]मालइ कुसुमासइ—( ग पं ) मालती पुष्पाणि मालतीशब्देनोच्यन्ते तानि चन्द्रकरैर्धवलीकृतानि[3] पुष्पाणि [ इत्या· ] शया त्रोटयन्तीत्यर्थः ।

८.१५.१३ सवरि—( ग ) शर्वरी ( हिंदी शवरी ) ।

८.१५.१५ एरिसे·· नंदिणए—( ग पं ) कैरवाणि कुमुदानि नन्दयन्ति विकाशयन्तीत्येवं शीला, संसिट्ठउ—( ग ) संशब्दित ।

८.१६.४ [1]छिण्णु ···किज्जइ—( ग प ) प्रदीपो द्वितीये दीपे दत्ते छिन्नच्छायो[2] भवति ।

८.१६.७ पयासइ—( ग प ) उद्योतयति ।

८.१६.८ नियंसणसारें—परिधानवस्त्रसारेण[3] ।

८.१६.९ कवणें[4]—( ग पं ) केन व्याजेन ।

८.१६.१२ विरायए[5]—( ग पं ) विराजते ।

(पं) इति अष्टम सन्धि

---

२ पं अस्तशिखर° । ३ पं सिलायल ममविगलयन्ति । ४ ग कुर्वति । [८.१५] १ पं °तद्गुणाव्यावृत्ता । २ पं मालइ । ३ प °द्धवली° । [८.१६] १ प छिन्न° । २ पं °छाया । ३ पं °वस्त्र.° । ४ प कवणई । ५ पं विरायइ ।

## सन्धि ९

९.१.४ रसदित्तं—( ग पं ) आवर्त्तितं सत् सुवर्णं दीप्तं भवति, काव्यं तु शृङ्गारादिरसैः दीप्तं भवति, पयछिण्णं[1]—( ग पं ) सुवर्णं पदेन मार्गेन खटिकाद्येकदेशेन छिन्नेन परीक्ष्य गृह्यते, काव्यं तु पदैः छिन्नैर्विविधैः शुद्धं परीक्ष्य गृह्यते।

९.१.५ भेल्लियउ[2]—( ग प) आकलितान्तस्तिवताः।

९.१.६ वाउल्लियउ—(ग) पुत्तलिकाः।

९.१.८ मयणकालसप्प—( पं ) मदनबाण.।

९.१.९. अमिय-वासउ—( ग पं ) अमृतमधु-आवास; वयणासउ—( ग प ) वदनमेव आसवो मद्यं[3] [4]वदनमद्यमित्यर्थ.।

९.१.१५ वहि ''दव्वहो—( ग प ) वहि' स्त्रीद्रव्येषु।

९.१.१८ तुअयागउ ''सव्वें—(ग पं ) कर्मोदयवशात् उदयागत भाव विवेकी उदासीनः सन् भुङ्क्ते; भुंजइ ''जिणु—( ग पं ) कर्माश्रयेण विना कर्माण्युपार्जयन् भुङ्क्त इत्यर्थ।

९.३.१ हले—( ख ग ) कमलश्रीरुवाच ( ख ) हालो कथा, ( ग ) कृषीवल कथा।

९.३.४ दुल्ललिउ—( ख ग पं ) दुश्चेष्टितः।

९.३.५ पंचत्तु—( ग पं ) मृत्युम्।

९.३.७ वाहियउ—( ग पं ) वञ्चित, विवाहियउ—( ख ग पं ) विवाहिता।

९.४.८ उद्दमविल—( ग पं ) दुर्दमबलीवर्द.।

९.४.१२ सिद्धउ '' वंछहि—( ग पं ) सिद्धं त्यक्त्वा असिद्धं वाञ्छसि।

९.४.१६ किच्छें—( ग प ) महता कष्टेन।

९.५.४ जामि न ''कोहे—( ग पं ) भवदीयवचनात् विषयाभिलाषेण[1] क्षय न व्रजामि।

९.५.५ आउक्खति—( ख ग पं ) आयुषः अन्ते।

९.५.१० थोवउ '''ममेवि—( ग पं ) स्तोकं भ्रान्त्वा।

९.५.१२ सज्झु ( ग पं ) साध्य.[2] भवति, मयणें—( ग प ) कामे [ न ]।

९.६.२ सयदक्किउ—( ग पं ) शतखण्डो भूत्वा।

९.६.८ अब्भहिउ—( ग पं ) अभ्यधिकम्[1]।

९.७.९ जर—( ग ) वृद्धः[1]।

९.७.१३ निहिउ ( पं विहिउ )—( ग पं ) पङ्के कृतः।

९.७.१६ अवडे—( ग पं ) कूपे; महु केहणे—( ग पं ) मधुबिन्द्वास्वादने आसक्तः।

९.८.१ सीसइ—( ख ग पं ) कथयति।

९.८.४ रूयउ एक्कु—( ख ग पं ) द्रममेकम्।

---

[९.१] १ पं °छिन्न। २ पं भिल्लि°। ३ पं मद्य.। ४ पं °मदोरित्यर्थ.। [९.५] १ पं विषयामिषलोभेन। २ पं साध्या। [९.६] १ पं °धिकः। [९.७] १ पं वृद्धता।

९.८.५ महिलसहाएं—महिला सहायो[1] यस्य तेन; रहसें चडिउ—( ख ग पं ) रूययो[2] ? सम्पत्तौ यः समुत्पन्नो रमसः तेन उभाभ्या चटितो[3] महति।

६.८.१० निउ—( ग पं ) निजं। गरिल्लउ—( पं ) अनर्घो-[ °र्घो? ] यम्।

६.८.१२ रूयउ""विलसिज्जइ—( ग पं ) अस्योपयोगः कर्त्तव्य इति परिभावितम्।

९.८.१५ मइं पाणें—( ग पं ) मतिक्रमणेन।

६.८.१८ पव्वे—( ग पं ) पर्वणि; हियए न पइट्ठउ—( ग पं ) हृदये न प्रविष्टं ( पं ) मद्ये [ मह्यं ? ] झटिति।

९.८.२२ महइ—( ख ग पं ) वाञ्छति; समग्गल—( ख ग पं ) समधिका; सग्गदिहि—( ख ग पं ) स्वर्गधृति, स्वर्गलक्ष्मी पूरिपूर्णमित्यर्थः।

६.६.३ विवण्णु—( ख ग पं ) मृतः।

९.९.४ एहु मंतु—( ख ग पं ) इति एतत् वा तात्पर्यम्।

९.६.५ कवलियप्पु—( ख ग पं ) विनाशितात्मस्वरूपम् पुरिसयोहें ( ख प ) ईदृशेन स्तोभेन व्युद्ग्राहेण।

६.६.६ महि""सत्तु—( ख ग पं ) पृथिव्यामुत्पादितं द्वीन्द्रियादिप्राणिगणः।

९.९.७-८ ( पं ) पाउससिरि इत्यादिपदचतुष्टयेन संबन्धः—पाउससिरि जरथेरि नाइं विहाइ ( पं ) प्रावृट्काललक्ष्मी जरस्थविरी इव प्रतिभाति, पाउससिरि जरथेरिनाइ ( I ) संतरयंबरीय—( ख ग पं ) प्रावृट्कालश्रीः—लक्ष्मी[1] शान्तमुपशमं गतं रजो धूलिर्यस्या [2]यस्या अम्बरे सा, जरस्थविरी पक्षे तु प्रशान्त रजोम्बर[3] रजस्वलावस्त्रं यस्याः ( II ) पओहरीय—पयोधराः मेघाः, स्तनौ च, (III) घन""विहाइं—( ख ग पं ) घनतिमिरेण निबिडान्धकारेण छन्नाः प्रच्छादिताः तारका. नक्षत्राणि ( ख ) 'आकाशे' यस्या प्रावृट्कालक्ष्म्या सा, [4]जरस्थविरी पक्षे तु[4] घनेन प्रचुरेण च चक्षुर्दोषेण छन्ना तारका [4]यस्या [:] सा[4], ( IV ) उल्लसियकास—( ख ग पं ) उल्लसिताः पुष्पिताः काशाः तृणविशेषा. यस्या प्रावृट्लक्ष्म्या सा, जरस्थविरी तु उल्लसितकाशाः—उत्कटकाश-श्वासा भवति।

९.९.९ तारतार—( ख ग पं ) अतिशयेन तार.।

६.६.१० मंदमंदु—( ख ग पं ) अतिशयेन मन्दः; संदु—( ख ग पं ) सान्द्रो मनोज्ञश्च।

९.९.१२ फलिह—""जडिलेव ( ख ग पं ) स्फटिकमयलिङ्गैर्जटिता इव।

९.१०.१ वह—( ख ग पं ) प्रवाह।

६.१०.२ जुण्णतण्ण—( ख ग पं ) जीर्णतृणमय।

६.१०.७ सरडे—( ख ग पं ) करकण्टकेन, ( ख ) कणघेन्यो लोके; मइजरढें—( ख ग पं ) अतिप्राज्ञेन।

६.१०.१० सरंतें—( ख ग पं ) स्मरता।

६.१०.१२ चुण्णउ ( पं चुन्नउ )—( ख ग पं ) दीनम्, ( पं ) वै स्फुटम्।

९.१०.२० कयबें—( ख ग पं ) समूहेन।

९.१०.२१ अहि—( ख ) सर्पः, वडिपहर—( प ) प्रतिप्रहार।

६.१०.२४ सिव-माहव—( ख ) शिवभूति ब्राह्मणः, द्वितीय नाम सत्यघोषः।

---

[९.८] १-ख ग °था। २ पं रूवउ। ३ पं चडितो। [९.९] १ पं सा हि। २ ख ग संत्या। ३ ख ग रजः°। ४ पं °स्थविरस्त्री तु। ५ पं प्रतिभाति।

९.११.३ दंतवणे ( पं दंतमुहं ) काणिउं—( ख ग पं ) दन्तैर्मुखेन च काणितः, दन्तैर्वा मुखे मुखप्रदेशे काणितः कृतच्छिद्रः।

९.११.४ मुज्झिउ—( ख ग पं ) अत्यासक्त.।

९.११.१२ तिणु—( पं ) तृण।

९.११.१३ जवपाणें—( ग पं ) अतिशयेन वेगेन।

९.११.१४ कयनाएं—( ख ग पं ) कृतनादेन; सुणह समवाएं—( ग ) सुनां [श्वानानां] समवाएन [येन]।

९.१२.५ विहूसियरूवउ—( ख ग पं ) विभूषितं रूपं दृष्टम्; नरु ... विरूवउ—( ख ग पं ) स एव नरः विरूपक. रूपरहितः ताभिर्वेश्याभिर्मन्यते, विरूवउ—( ख ) यो रूपकेण द्रव्येण रहितः।

९.१२.६ खणदिट्ठो ... सिट्ठउ—( ख ग पं ) सहिरण्य. पुरुष. प्रथमतः क्षणमात्रेण दृष्टोऽपि प्रियो वैशिक-व्याजेन ( ग ) अतीव वल्लभ. शिष्ट. प्रतिपादित.; पणया ... न दिट्ठउ—( ख ग पं ) य. पुनराजन्मनः प्रणयारूढो मित्रः स एव निर्धनो जातो यदा तदा स जन्मनि अपि मया न दृष्टोऽयम् इति परित्यज्यते।

९.१२.७ नउलु ... वणियउ—( ख ग पं ) नकुलोद्भवा ( ख ग द्भूताः ) नकुलोदरास्ताः गणिकास्तदा ताः कथं भुजङ्गैः सर्पै. दन्तनखै व्रणिताः, भुजङ्गानां नकुलाभिर्वध्यमानत्वात्? अत्राह–यतो न कुलोद्भवाः कुलहीनास्ततो भुजङ्गैर्विटैर्दन्तनखैर्व्रणिता।

९.१२.८ वम्मह ... परिचत्तउ—( ख ग पं ) मन्मथस्य कामस्य दीपिकाः उद्दीपिकाः न तु दं पिका स्नेह-सङ्गवत्यो भविष्यन्ति; अत्राह—यद्यपि ताः दीपिकाः, तोवि–तथापि स्नेहसङ्गपरित्यक्ता, कार्यवशाद्वेव वैशिकेन ताः केनचित् सह स्नेहसङ्ग प्रदर्शयन्तीत्यर्थ.।

९.१२.९ डगिर ... दच्छउ—( ख ग प ) शाकिन्यो हि रक्ताकर्षणे दक्षा. भवन्ति, गणिकास्तु रक्तानामुत्पा-दितानुरागाना कर्षणे दक्षाः।

९.१२.१० मेरु ... नियंबउ—( ख ग पं ) मेरोः महीधराणा ( ग पं ) षट्कुलपर्वतानां च मही-भूमिस्तत्-प्रतिबिम्ब तेन सदृशः तन्मही हि किंपुरुषादिभिर्बहुभिर्देवविशेषै. सेवितनितम्बा इति, गणिकास्तु किंपुरुषै-र्बहुभि. कुत्सितै. पुरुषै. सेवितनितम्बाः इति।

९.१२.११ नरवइ ... संजोयउ—( ख ग पं ) नरपतिनीतिभिः समानविभोगाः, नरपतिनीतयो हि अर्थ-वन्त्य प्रवर्त्तन्ते, अनर्थसंयोग दूरतः परिवर्जयन्ति, गणिकाना विभोगा अपि अर्थवन्त्येव प्रवर्त्तन्ते, अनर्थ-संयोगं दूरतः परित्यजन्तीत्यर्थः।

९.१२.१२ अहरे राउ—( ख ग पं ) ओष्ठे नीचे च राग., मदनोऽपि कामोऽपि नीचः एवं यासा वर्त्तते।

९.१२.१४ परवंचण—( ग पं ) परवञ्चनादि सम्बन्धे स्त्रीजने ( पं ) परवंचनहहियाए इति पाठे।

९.१२.१५ न सरूवउ—( ख ग पं ) तत् स्वभावस्वरूपं न।

९.१२.१६ जं मिट्ठंतु ... पीडए पुणु—( ग पं ) मिष्टान्नं यत् तत्रैव नायं श्रद्धाया गुण., तथा सुन्दरं यत् तत्रैव तरुणचित्तेपु रञ्जिता प्रीति. रञ्जनार्थं पीडा वा इति पाठ., तदभिलाषः यस्य प्रयासस्य च नायं गुणः, (पं) एतेन किं सूक्तम् [उक्तम्]? सेव्यासेव्यं वेश्या न पश्यति [ इति ]।

---

[९.११] १ पं °प्रदेशो। २ पं तणु। [९.१२] १ पं नरो विरूपको रूपकरहितस्ताभिर्मन्यते। २ पं न दृष्ट इव। ३ पं °ता। ४ ग भुजं°। ५ पं विटदंतनखैर्व्रणिता। ६ पं °पिका। ७ पं °दिभिर्देवविशेषैर्बहुभि.। ८ ख ग °च। ९ पं °नितंबा। १० ख ग °वंति। ११ ख अर्थवंत एव। १२ पं नीच। १३ पं मृ°। १४ पं यत्रैव।

९.१२.१७ मंडणे ... विहजणे (ग पं)—[ मडने ] श्वेतपीतादिवर्णापेक्षा[१५] न ब्राह्मणाद्यपेक्षा[१५]; गउ-रवणे—(ग प) नितम्बे एव गुरुता ।

९.१२.१८-१९ आयरेण ... महुसंचु जिह । रिच्चेवइ ... सचुंवंति तिह—(ग पं) यथा मधुसञ्च[१६]—मधुछत्र सरसं कर्तुं, निउणउ—निपुणाः[१७] दक्षाः उड्डापिताः सन्त्यः[१८] खुद्दउ—मधुमक्षिकाः सञ्चुम्बन्ति मधुसञ्चं, तिह—तथा आदरेण सरस पुरुष सुचिरमालिङ्ग्य रक्तं कर्तुं निपुणा.[१९] गणिका. क्षुद्रा. पर-वञ्चकत्वेन दुष्टाभिप्राया ।

९.१३.१ का वि ... गणती—(ग पं) चतुष्पदे संबन्ध., नवदविणु—अभिनवोपार्जितार्थ[१] पुरुषम्, गणंती—चित्ते धरन्ती, हियधणमणुम—(ग पं) गृहीतार्थपुरुषम्, अमुणती[२]—अनिच्छन्ती ।

९.१३.२ निरोहवि[३]—(ग प) गृहे प्रवेश निषिध्य ।

९.१३.३ जो अप्पिउ—(ग) दत्त यद्द्रव्यम् ।

९.१३.४ विमत्तिए—(ग) बुद्धिहीनया, (पं) बुद्धे हीनया ।

९.१३.५ [४]कडच्छए—(ग प) कच्छायाम् ।

९.१३.७ धणु वि उवलंभइ—(ग पं) [५]कश्चिदन्यस्याशक्तिवशाद्दत्तधनापि[६], ढोउ न लहमि[७]—निर्द्धनोऽयमिति ज्ञात्वा न स्वीकरोति[८], तत्र निरपेक्षा, अन्यत्र विजृम्भते, ततोऽसौ उवलभइ—उपालम्भयति लोकानामग्रे तस्या कथा कथयति ।

९.१३.८ निहुवणु[९]—(ग पं) सुरतव्यापारम् ।

९.१३.११ सेय—(ग प) प्रस्वेद, कल—(ग पं) मनोज्ञ[१०] ।

९.१३.१२ वणु व हयवच्छउ—(ग प) वनो निवारितवृक्षम्[११], [ मिथुनः ] हतवक्षस्थल[१२] च, करणपरि-पूर्णम्, यथा राजकुल करणैरधिकम्, किंपुरुषे पूर्णं च ।

९.१३.१३ रूवियबंधउ[१३]—(ग प) निरूपितकर्म-प्रकृत्यादिबन्ध[१४] निधुवन च रतिकृतकरणबन्ध विलास-शास्त्रे[१५] विशेषत ; रिद्ध ... खधउ—(ग पं) कृषीबलाः समर्पितसिद्धदायाः [°सिद्धयादय.] (पं कृषाणा समर्पन्ति सिद्धादाय) मिथुनमपि अर्पितस्कन्धम् ।

९.१३.१४ अंधय ... व्वणु—(ग प) अन्धकदानवस्य वधू इव मिथुननिहुअणं तद्वधार्थं[१६] हि न जाता[१७] हरस्य व्रणा[१८], [१९]निधुवनं तु जातनखव्रणम्[१९], सरु—(ग पं) शब्द बाणश्च ।

९.१३.१५ कड्ढियकरवालउ—(ग प) करवाल—खड्ग.,[२०] आकर्षिता. करेण वालाः[२१] [२२]केशा यत्र तत् च[२२], रेय—(ग पं) रेत शर्करा[२३] सूक्ष्मवालुका च ।

९.१३.१६ समुग्गयसुक्कउ—(ग पं) समुद्गतशुक्रः गृहविशेषो दानवबले[२४]; पक्षे शुक्र—रेत मिथुन-निधुवने ।

९.१३.१८ नियइ—(ग पं) अवलोकयते ।

९.१४.१३ चित्तब्भमणे—(पं) अन्यमनस्कतया गमने ।

---

१५ प °पेक्षणं । १६ ग °सिंचं । १७ प °णा । १८ ग सत्य । १९ ग °णा । [९.१३] १ पं °तोर्थं । २ पं अग° । ३ पं °हेवि । ४ पं °च्छुहे । ५ पं कश्चिदन्या° । ६ प °धनोपि । ७ पं °इ । ८ पं स्वोकारयति । ९ पं °यणु । १० पं °ज्ञं । ११ पं °वृक्ष । १२ पं °स्थल । १३ पं °वतउ । १४ पं °बन्ध । १५ पं °बन्धयोरि[रति°] विलासशास्त्रे । १६ पं °र्थे । १७ पं जातं । १८ प व्रण । १९ पं मिथुन निहुव्रणे जात नखव्रण । २० पं खड्ग । २१ पं बाला । २२ पं केशाकर्षणं च । २३ पं शर्कर । २४ प °बलो ।

९.१५.२ तक्करु—( ग पं ) चौरः।

९.१५.७ कुसुमालें—( ग पं ) चौरेण।

९.१५.१३ विवत्थए—( ग पं ) व्यवस्थया[1]।

९.१६.४ न पवसइ पुत्तु तउ—( ग पं ) तव पुत्रः[1] न व्रजति, न गच्छति।

९.१६.६ जायरमं ज़णयं—( ग पं ) जाग्रतो निद्राकरणम्।

९.१७.१० वच्छरेसु—( ग पं ) संवत्सरेषु।

९.१७.११ सद्धु—( ग पं ) श्रद्धावान्।

९.१७.१३ बूहि—( ख ग पं ) ब्रूहि; आगुरू—( ख ग पं ) आसमन्तात् महान्तः एते पितृस्थानीयाः[1]; लहू व—( ग पं ) अहं लघु. पुत्रस्थानीयः एतेषाम्; ऊहि—( ख ग पं ) एतत् स्वचित्ते सप्रधारय।

९.१७.१४ आवओ समाणि अम्मि—( ख ग पं ) [2]आगतः सन्[2], समाणि—सन्मानय, अम्मि—हे मातः; ( ग पं ) अन्यत् आगुरुलघुचतुष्क[3]गणैरागतं समानिका छन्दो नाम[4]।

९.१७.१५ पुत्ताणुमइए—(ख ग पं ) पुत्रानुमत्या।

९.१८.२ वेसपड्ड[1]—( पं ) वेशदक्षः[2]।

९.१८.३ केसकडि—( ग पं ) केशा।

९.१८.४ कयबंधमए—( ख ग पं ) केशबन्धसद्भावात; उग्गंठिय—( ख पं ) छोडितग्रन्थी, ( ग ) छोडितग्रन्थि।

## सन्धि १०

१०.१.६ कण्णाह ''ण्वत्रण—कर्णातिशयात् स्याम. प्रास प्राप्तौ येन।

१०.१.१० वण्णाखिल[1]·····सिंग—वर्णेन यशसा धवलितानि [2]अखिलानि शिखरिणा शृङ्गानि[2] शिखराणि येन।

१०.१.१२ मालंकिय—( ख ग पं ) लक्ष्मीभूषिता।

१०.१.१४ वियास—( ख ग प ) विकास[3]; आसाइय—( ग पं ) समासादित।

१०.२.७ तउ—( ख ग पं ) तप.; कायहो कारणे—( ख ग पं ) कायस्य निमित्ते; आयहो—( ख पं ) एतस्मात् कृततपस आ शारीराख्यस्य फलं किम् ? न किमपि[1]।

१०.२.८ सुदधु · निद्दिट्ठउ—जीवो-जीवः शुद्धो निर्गुणो अकर्त्ता कायादिभिरसस्पृष्ट.[2] इति विशेषोक्ति; चेट्ठ-अचिट्ठउ—( ख ग पं ) एताभिश्चेष्टाभिरस्पृष्ट[2]ः।

१०.३.५ भति—( ग पं ) वञ्चयन्ति।

१०.३.७ न नियच्छु · सोक्खु ( ग पं ) संसारसौख्यं मुक्त्वा अन्यो[1] निजार्थो[2] नास्ति ( पं ) अत. किम् ?

१०.३.६ धम्मद्दि····रुहेण—( ग पं ) धर्म एवाद्रि. पर्वतस्तस्य शिखरं तत्र यग्णीरुह.[3] वृक्ष.[4] यस्तेन।

---

[९.१५] १ प व्यवस्थाया। [९.१६] १ पं पुत्रं। [९.१७] १ पं °नीया। २ ग आगंतं संतं। ३ पं °चतुष्क°। ४ पं नामो। [९.१८] १ ख ग वंसपड्ड। २ ख ग वशदक्षः।

[१०.१] १ पं वत्रेत्यादि। २ पं अखिलशिखरिश्रृंगानि। ३ पं °सो। [१०.२] १ पं कस्यापि। २ पं °स्पृष्ट। [१०.३] १ पं अन्यं। २ पं °र्थं। ३ ग °रुहो। ४ ग वृक्षो।

१०.३.१० मिच्छा....सुसमु—( ग प ) मिथ्या असत्यो य. प्रपञ्चः जीवो नास्ति, धर्मो, नास्ति, परलोको नास्ति इत्यादिरूपस्तेन वञ्चितताना सुसमः सुन्दरः।

१०.३.११ तत्तत्थु....हसिउ—( ग पं ) तत्तत्थु-तत्त्वार्थः, तत्त्वभूते परमार्थभूते अर्थे जीवादौ ये साधवो जनाः गणधरदेवादयस्तैरुपहसितः[५]।

१०.४.१ सवियप्पहो....कारणु—( ग पं ) पञ्चेन्द्रियमनः प्रभवतया ,सविकल्पस्य षट्प्रकारभेदभिन्नस्य ज्ञानस्य भूतानि पृथिव्यादीनि, साहारणु कारणु—सर्वेषा समानं यदि अन्तरङ्गकारणं स्यात्।

१०.४.२ तो म....सुत्तहो—( ग प ) तो—ततः मूर्तकारणजन्यत्वात् मूर्तस्य ज्ञानस्य तदा समाना परिणतिः[१] सर्वेषा समानो ज्ञानपरिणाम. किं न स्यात्? अत्रार्थे दृष्टान्तमाह—पटरंगेण....सुत्तहो—( ग पं ) विशेषोक्ति-पदाग्रे दिनमूर्त्तेण[२] साधारणकारणेन पटे रञ्ज्यमाने पटरङ्गेण समानः सूत्रस्य रङ्गो यथा भवति।

१०.४.३ अह ....निरूविउ—( ग पं ) सहकारिकारणं ज्ञानोत्पत्तौ भूतानि निरूपितानि नोपादानकारण तर्हि[३] अण्णु जि[३]....सूइउ—( ग पं ) अन्यदेव जीवलक्षणं [४]अन्तरङ्ग उपादानभूत ज्ञानावरणादिक्षयोपशम-लक्षणं च त्वया एव सूचितं प्रतिपादितम्।

१०.४.४ कज्जहो....सलक्खणु—( ग पं ) यत् सहकारिकारणभूत पृथिव्याद्यात्मकं [५]शरीरादिकार्यं च ज्ञानादि तत् कारणं सहकारिभावेन जनकं नवर वपुर्लक्षणं येन शरीरस्याचेतनत्वे ज्ञानादेरप्यचेतनत्वं स्यात्; अत्र दृष्टान्तमाह—मिउ....सविलक्खणु—( ग पं ) यथा मृत्पिण्डो घटस्य जनकोन पुन. तस्य लक्षणं स्वरूप, न हि मृत्पिण्डसदृशो घट मृत्पिण्डस्य जलधारणाहरणे [ऽ] समर्थत्वात्, घटस्य तु तत् समर्थत्वात्, पृथुबुध्नो-दराद्याकारत्वाच्च उपलक्षणदृष्टान्तमाह; अविलक्षणमिति पाठे मृद्रूपतया मृत्पिण्डो घटेन अविलक्षण. सदृशः पृथुबुध्नोदराद्याकारतया जलधारणाहरणाद्यर्थक्रियाकारितया च विलक्षण इति।

१०.४.५ सच्चउ ....आयण्णहि—( ग पं ) यस्यान्तरङ्ग उपादानभूतं यत्कारणं तत् सत्य कथयामि, आकर्णय; नाणहो.. मण्णहि—( ग पं ) ज्ञानस्योत्पाद्यमानस्योपादानकारण ज्ञानमेव उपयोगलक्षणलक्षिता-त्मैवेत्यर्थः।

१०.४.६ बद्धउ ....निरूइउ—( ग पं ) साङ्ख्यमतमाश्रित्य त्वया सूचितं सदैव जीवो मुक्तः, बद्धो जीव इति तन्मोह;[६] अज्ञानमेतत् प्रकृतेरेव बन्धसद्भावात् यथा दर्पणे मुखमेव सम्बद्धं, मोहवशान्मुखदर्पणे सम्बन्ध [ सम्बद्ध° ? ] मिति दर्पणे वदनाभासो न[७] पुनः सत्यो वदनप्रतिभासस्तत्रेति।

१०.४.७ अत्र दूषणमाह—अवियारिउ....असारउ—( ग पं ) अय सिद्धान्तस्त्वदीयो[८] अविचारितः—विचार-क्षमो न भवति यतो विघटितेन युक्त्या विचार्यमाणः, अतो असारोऽयमिति प्रेक्ष्य अवलोकय त्व मध्यस्थो भूत्वा, दर्पणे हि मूर्ते वदनं मूर्तं तावन्न प्रविशति अतः शरीरस्थवदनं मुक्त्वा दर्पणे वदन कथं दृश्यते? किन्तु शरीरस्थमेव वदनं तत्प्रतीयते तत् प्रतिपत्तौ च प्रकृत्या प्रदर्श्यते।

१०.४.८ दप्पणतेय....विवरेरउ—( ग पं ) दर्पणतेजसि मिलित नायनं—तेज.[९], ( पं ) नायना रश्मयः, होइ विवरेरउ—दर्पणेऽभिमुखं सत् व्याघुट्य शरीराभिमुख भवति तदिदमाश्चर्यम्, नच्छेउ—( पं ) नेद-माश्चर्यम्।

१०.४.१०-११ चक्खु ....अवलोयइ नाणु वि....मिलियउ—( ग पं ) चक्षुषा निरुद्ध दर्पणतेजसा प्रतिहतम्, पुरउ—अग्रे स्थित, शुद्धं दर्पणे स्थितं स्वरूपम्, न विलोयइ—न पश्यति, वदनस्वरूप तु वलेवि—व्याघुट्य अवलोकते, तत् प्रभव च ज्ञानमपि कर्मशक्तिसंचालितं[१०] मिथ्यात्वकर्मोदयसहित मिथ्यादर्शनसहचरित-

---

५ पं °हसितो। [१०.४] १ प °णति। २ पं दिनामूहूर्त्तेन। ३ प अन्नु जे। ४ ग अंतरंग°। ५ पं °कार्यश्च। ६ प °हो। ७ ग नः। ८ पं सिद्धातं त्व°। ९ पं तेजो। १० पं संच°।

